॥ श्रीः ॥

मार्त्तण्डभैरवतन्त्रोक्तं

# महाकालशनिमृत्युञ्जयस्तोत्रम् ।

नेपालीयाञ्जनाभाभिधानवैद्यराजद्वारा संशोधितम् ।


खेमराज श्रीकृष्णदास,

अध्यक्ष-"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,

बम्बई.

संवत् १९९३, शके १८५८.

॥ ❀ ॥ श्रीशनैश्चराय नमः ॥ ❀ ॥



मुद्रक और प्रकाशक–

**खेमराज श्रीकृष्णदास,**

मालिक–"श्रीवेङ्कटेश्वर" स्टीम्–प्रेस, बम्बई.

॥ श्रीः ॥

# अथ मार्तण्डभैरवतन्त्रोक्तं महाकालशनिमृत्युञ्जयस्तोत्रम् ।



श्रीगणेशाय नमः ॥ ॐ शनैश्चराय नमः॥नी-
लाद्रिशोभाञ्चितदिव्यमूर्तिः खड्गी त्रिदण्डी शर-
चापहस्तः ।शंभुर्महाकालशनिःपुरारिर्जयत्यशेषा-
सुरनाशकारी ॥ १ ॥ मेरुपृष्ठे समासीनं सामरस्ये
स्थितं शिवम्॥प्रणम्य शिरसा गौरी पृच्छति स्म
जगद्धितम् ॥ २ ॥ पार्वत्युवाच॥भगवन् देवदेवेश
भक्तानुग्रहकारक ॥ अल्पमृत्युविनाशाय यत्त्वया
पूर्वसूचितम् ॥ ३ ॥ तदेव त्वं महाबाहो लोकानां
हितकारकम्॥ तव मूर्तिप्रभेदस्य महाकालस्य सां-
प्रतम् ॥४॥ शनेर्मृत्युञ्जयस्तोत्रं ब्रूहि मे नेत्रजन्म

नः ॥ अकालमृत्युहरणमपमृत्युनिवारणम् ॥५॥
शनिमन्त्रप्रभेदा येतैर्युक्तं यत्स्तवं शुभम्॥प्रतिनाम
चतुर्थ्यन्तं नमोन्तं मनुना युतम् ॥ ६ ॥ श्रीश्वर
उवाच ॥ नित्ये प्रियतमे गौरि सर्वलोकहिते रते॥
गुह्याद्गुह्यतमं दिव्यं सर्वलोकोपकारकम् ॥ ७ ॥
शनिमृत्युञ्जयस्तोत्रंप्रवक्ष्यामि तवाधुना॥सर्वमङ्ग-
लमांगल्यं सर्वशत्रुविमर्दनम् ॥८॥ सर्वरोगप्रशमनं
सर्वापद्विनिवारणम् ॥ शरीरारोग्यकरणमायुर्वृद्धि-
करं नृणाम्॥९॥ यदि भक्तासि मे गौरि गोपनीयं
प्रयत्नतः॥गोपितं सर्वतन्त्रेषु तच्छृणुष्व महेश्वरि॥
॥ १० ॥ ॐ अस्य श्रीमहाकालशनिमृत्युञ्जयस्तो-
त्रमन्त्रस्य पिप्पलाद ऋषिरनुष्टुप्छन्दो महाकाल-
शनिर्देवता शं बीजमायसी शक्तिः कालपुरुषायेति
कीलकं ममाकालापमृत्युनिवारणार्थेपाठेविनियो-
गः ॥ ऋषिन्यासं करन्यासं देहन्यासं समाचरेत्।
महोग्रं मूर्ध्नि विन्यस्य मुखे वैवस्वतं न्यसेत् ११॥

गले तु विन्यसेन्मन्दं बाह्वोर्महाग्रहं न्यसेत्॥हृदि न्यसेन्महाकालं गुह्ये कृशतनुं न्यसेत्॥१२॥जान्वोस्तूड्चरं न्यस्य पादयोस्तु शनैश्चरम् ॥ एवं न्यासविधिं कृत्वा पश्चात्कालात्मनः शनेः॥१३॥ न्यासं ध्यानं प्रवक्ष्यामि तनौ ध्यात्वा पठेन्नरः।कल्पादियुगभेदांश्च करांगन्यासरूपिणः॥१४॥ कालात्मनो न्यसेद्गात्रे मृत्युञ्जय नमोस्तु ते। मन्वन्तराणि सर्वाणि महाकालस्वरूपिणः॥१५॥भावयेत्प्रति प्रत्यंगे महाकालाय ते नमः॥ भावयेत्प्रभवाद्यब्दान्शीर्षे कालजिते नमः॥ १६ ॥ नमस्ते नित्यसेव्याय विन्यसेदयने भ्रुवोः॥सौरये च नमस्तेस्तु गण्डयोर्विन्यसेदृतून् ॥१७॥श्रावणं भावयेदक्ष्णोर्नमः कृष्णनिभाय च ॥ महोग्राय नमो भाद्रं तथा श्रवणयोर्न्यसेत्॥१८॥ नमो वै दुर्निरीक्ष्याय चाश्विनं विन्यसेन्मुखे। नमो नीलमयूखाय ग्रीवायां कार्तिकं न्यसेत् ॥१९॥ मार्गशीर्षं न्यसे-

ह्राह्वोर्महारौद्राय ते नमः।ऊर्ध्वलोकनिवासाय पौषं तु हृदये न्यसेत्॥२०॥नमः कालप्रबोधाय माघं वै चोदरे न्यसेत्॥मन्दगाय नमो मेढ्रे न्यसेद्वै फाल्गुनं तथा ॥२१॥ उर्वोर्न्यसेच्चैत्रमासंनमःशिवोद्भवाय च ॥ वैशाखं विन्यसेज्जान्वोर्नमः संवर्त्तकाय च ॥ २२॥ जंघयोर्भावयेज्ज्येष्ठं भैरवाय नमस्तथा ॥ आषाढं पादयोश्चैव शनये च नमस्तथा ॥२३॥कृष्णपक्षं च क्रूराय नम आपादमस्तके ॥ न्यसेदाशीर्षपादान्ते शुक्लपक्षं ग्रहाय च ॥ २४ ॥ न्यसेन्मूलं पादयोश्च ग्रहाय शनये नमः ॥ नमः सर्वजिते चैव तोयं सर्वांगुलौ न्यसेत् ॥ २५ ॥ न्यसेद्गुल्फद्वये विश्वं नमः शुष्कतराय च ॥विष्णुभं भावयेज्जंघोभये शिष्टतमाय ते ॥ २६ ॥ जानुद्वये धनिष्ठां च न्यसेत्कृष्णरुचे नमः॥ऊरुद्वये वारुणर्क्षं न्यसेत्कालभृते नमः ॥ २७॥ पूर्वभाद्रं न्यसेन्मेढ्रे जटाजूटधराय च ॥ पृष्ठ उत्तरभाद्रं च करालाय

नमस्तथा॥२८॥ रेवतीं च न्यसेन्नाभौ नमो मन्द-
चराय च ॥ गर्भदेशे न्यसेद्दस्रं नमः श्यामतराय
च ॥२९॥ नमो भोगिस्रजे नित्यं यमं स्तनयुगे
न्यसेत् ॥ न्यसेत्कृत्तिकां हृदये नमस्तैलप्रियाय
च ॥ ३०॥ रोहिणीं भावयेद्धस्ते नमस्ते खड्गधा-
रिणे ॥ मृगं न्यसेद्वामहस्ते त्रिदण्डोल्लसिताय च॥
॥३१॥ दक्षोर्द्ध्वं भावयेद्रौद्रं नमो वै बाणधारिणे॥
पुनर्वसुमूर्ध्ववामे नमो वै चापधारिणे॥३२॥तिष्यं
न्यसेद्दक्षबाहौ नमस्ते हरमन्यवे॥ सार्पं न्यसेद्वाम-
बाहौ चोग्रचापाय ते नमः ॥३३॥ मघां विभाव-
येत्कण्ठे नमस्ते भस्मधारिणे॥मुखे न्यसेद्भगर्क्षं च
नमः क्रूरग्रहाय च ॥३४॥ भावयेद्दक्षनासायामर्-
यमाणं च योगिने ॥ भावयेद्वामनासायां हस्तर्क्षं
धारिणे नमः॥३५॥ त्वाष्ट्रं न्यसेद्दक्षकर्णे कृसरान्न
प्रियाय ते॥ स्वातीं न्यसेद्वामकर्णे नमो ब्रह्ममयाय
ते ॥३६॥विशाखां च दक्षनेत्रे नमस्ते ज्ञानदृष्टये।

विष्कंभं भावयेच्छीर्षसन्धौ कालाय ते नमः३७॥
प्रीतियोगं भ्रुवोः सन्धौ महामंद नमोस्तु ते॥नेत्र-
योः सन्धावायुष्मद्योगं भीष्माय ते नमः ॥३८॥
सौभाग्यं भावयेन्नासासंधौ फलाशनाय च॥शोभ-
नं भावयेत्कर्णे सन्धौ पुण्यात्मने नमः ॥ ३९ ॥
नमःकृष्णायातिगण्डं हनुसन्धौ विभावयेत्॥नमो
निर्मांसदेहाय सुकर्माणं शिरोधरे ॥ ४० ॥ धृतिं
न्यसेद्दक्षबाहौ पृष्ठे छायासुतायच ॥ तन्मूलसंधौ
शूलं च न्यसेदुग्राय ते नमः॥४१॥तत्कूर्परं न्यसेद्ग-
ण्डे नित्यानंदाय ते नमः ॥ वृद्धिं तन्मणिबंधे च
कालज्ञाय नमो न्यसेत्॥४२॥ध्रुवं तदंगुलीमूलस-
न्धौ कृष्णाय ते नमः।व्याघातं भावयेद्वामबाहुपृष्ठे
कृशायच ॥४३॥ हर्षणं तन्मूलसंधौ भूतसंतापिने
नमः ॥ तत्कूर्परे न्यसेद्वज्रं सानंदाय नमोस्तु ते॥
॥ ४४ ॥ सिद्धिं तन्मणिबंधे च न्यसेत्कालाग्नये
नमः॥व्यतीपातं कराग्रेषु न्यसेत्कालकृते नमः४५

वरीयांसं दक्षपार्श्वसंधौ कालात्मने नमः ॥ परिघं भावयेद्वामपार्श्वसंधौ नमोस्तु ते ॥४६॥ न्यसेद्द-क्षोरुसंधौ च शिवं वै कालसाक्षिणे॥तज्जानौ भा-वयेत्सिद्धिं महादेहाय ते नमः॥४७॥साध्यं न्यसे-च्च तद्गुल्फसंधौ घोरायते नमः ॥ न्यसेत्तदंगुली-संधौ शुभं रौद्राय ते नमः ॥४८॥ न्यसेद्वामोरु-संधौ च शुक्लकालविदे नमः॥ब्रह्मयोगं च तज्जानौ न्यसेत्सद्योगिने नमः॥४९॥ ऐन्द्रं तद्गुल्फसन्धौ च योगाधीशाय ते नमः ॥ न्यसेत्तदंगुलीसंधौ नमो भव्याय वैधृतिम् ॥५०॥ चर्मणि ववकरणं भाव-येद्यज्वने नमः॥बालवं भावयेद्रक्ते संहारक नमो-ऽस्तु ते ॥५१॥ कौलवं भावयेदस्थि नमस्ते सर्व-भक्षिणे॥तैतिलं भावयेन्मांसे आममांसप्रियाय ते ॥ ५२ ॥ गरंन्यसेद्वपायां च सर्वग्रासाय ते नमः॥ न्यसेद्वणिजं मज्जायां सर्वान्तक नमोस्तु ते॥५३॥ वीर्यें विभावयेद्विष्टिं नमो मन्यूग्रतेजसे॥रुद्रमित्र-

पितृवसुवारीण्येतांश्च पंच च ॥ ५४ ॥ मुहूर्तांश्च
दक्षपादनखेषु भावयेन्नमः ॥ खगेशाय च खस्थाय
खेचराय खरूपिणे ॥५५॥ पुरुहूतशतमखे विश्व-
वेधो विधूंस्तथा॥ मुहूर्त्तांश्च वामपादनखेषु भावये-
न्नमः ॥५६॥सत्यव्रताय सत्याय नित्यसत्याय ते
नमः ॥ सिद्धेश्वर नमस्तुभ्यं योगेश्वर नमोस्तुते
॥५७॥वह्निनक्तञ्चरांश्चैव वरुणार्यमयोनिकाम्॥मु-
हूर्त्तांश्च दक्षहस्तनखेषु भावयेन्नमः ॥५८॥ लग्नो-
दयाय दीर्घाय मार्गिणे दक्षदृष्टये॥वक्राय चाति-
क्रूराय नमस्ते वामदृष्टये॥५९॥ वामहस्तनखेष्व-
न्त्यवर्णेशाय नमोस्तुते॥ गिरिशाहिर्बुध्न्यपूषाज-
पादस्रांश्च भावयेत् ॥६०॥ राशिभोक्त्रे राशिगाय
राशिभ्रमणकारिणे॥राशिनाथाय राशीनांफलदात्रे
नमोस्तुते ॥ ६१ ॥ यमाग्निचन्द्रादितिकविधातृंश्च
विभावयेत् ॥ ऊर्ध्वहस्तपक्षनखेष्वंत्यकालाय ते
नमः ॥६२॥ तुलोच्चस्थाय सौम्याय नक्रकुम्भगृ-

हाय च ॥ समीरत्वष्टृजीवांश्च विष्णुतिग्मद्युतीन्न्य-
सेत्॥६३॥ऊर्ध्ववामहस्तनखेष्वन्यग्रहनिवारिणे ।
तुष्टाय च वरिष्ठाय नमो राहुसखाय च ॥ ६४ ॥
रविवारं ललाटे च न्यसेद्भीमदृशे नमः॥सोमवारं
न्यसेदास्ये नमोमृतप्रियाय च ॥ ६५ ॥ भौमवारं
न्यसेत्स्वान्ते नमो ब्रह्मस्वरूपिणे॥मेढ्रे न्यसेत्सौ-
म्यवारं नमो जीवस्वरूपिणे॥६६॥वृषणे गुरुवारं
च नमो मन्त्रस्वरूपिणे ॥ भृगुवारं मलद्वारे नमः
प्रलयकारिणे ॥६७॥ पादयोः शनिवारं च निर्मां-
साय नमोस्तु ते ॥ न्यसेत्केशेषु घटिकां नमस्ते
सूक्ष्मरूपिणे ॥ ६८ ॥ कालरूपिन्नमस्तेऽस्तु सर्व-
पापप्रणाशक॥त्रिपुरस्य वधार्थाय शंभुजाताय ते
नमः ॥ ६९ ॥ नमः कालशरीराय कालनुन्नाय ते
नमः ॥ कालहेतो नमस्तुभ्यं कालनन्दाय वै नमः
॥७०॥अखण्डदण्डमानाय त्वनाद्यन्ताय वै नमः॥
कालदेवाय कालाय कालकालाय ते नमः॥७१॥

निमेषादिमहाकल्पकालरूपं च भैरवम् ॥ मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥७२॥ दातारं सर्वभव्यानां भक्तानामभयङ्करम्॥मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥७३॥ कर्त्तारं सर्वदुःखानां दुष्टानां भयवर्धनम्॥मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥७४॥ हर्त्तारं ग्रहजातानां फलानामघकारिणाम् ॥ मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम्॥७५॥सर्वेषामेव भूतानां सुखदं शान्तमव्ययम् ॥ मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥७६॥ कारणं सुखदुःखानां भावाभावस्वरूपिणम् ॥ मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥७७॥ अकालमृत्युहरणमपमृत्युनिवारणम् ॥ मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम्॥ ॥७८॥कालरूपेणसंसारंभक्षयन्तंमहाग्रहम्॥मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम्॥७९॥दुर्निरीक्ष्यं स्थूलरोमं भीषणं दीर्घलोचनम्॥मृत्युञ्जयं

महाकालं नमस्यामि शनैश्चरम् ॥ ८० ॥ ग्रहाणां ग्रहभूतं च सर्वग्रहनिवारणम्॥मृत्युञ्जयं महाकालं नमस्यामि शनैश्चरम्॥८१॥ कालस्य वशगाः सर्वे न कालःकस्यचिद्वशः ॥ तस्मात्त्वां कालपुरुषं प्रणतोऽस्मि शनैश्चरम् ॥८२॥कालादेव जगत्सर्वं काल एव विलीयते॥कालरूपः स्वयं शंभुः कालात्मा ग्रहदेवता ॥८३॥ चण्डीशो रुद्रडाकिन्याक्रान्तश्चण्डीश उच्यते ॥ विद्युदाकलितो नद्यां समारूढो रसाधिपः ॥८४॥ चण्डीशः शुकसंयुक्तो जिह्वया ललितः पुनः ॥ क्षतजस्तामसी शोभी स्थिरात्मा विद्युता युतः॥८५॥नमोन्तो मनुरित्येष शनितुष्टिकरःशिवे॥आद्यन्तोष्टोऽत्तरशतं मनुमेनं जपेन्नरः ॥८६॥यः पठेच्छृणुयाद्वापि ध्यात्वा संपूज्य भक्तितः॥तस्य मृत्योर्भयं नैव शतवर्षावधि प्रिये॥ ॥८७॥ ज्वराः सर्वे विनश्यंति दद्रुविस्फोटकच्छुकाः ॥ दिवा सौरिं स्मरेद्रात्रौ महाकालं यजन्

पठेत्॥८८॥जन्मर्क्षे च यदा सौरिर्जपेदेतत्सहस्र-
कम्॥वैधगे वामवेधे वा जपेदर्द्धसहस्रकम् ॥८९॥
द्वितीये द्वादशे मन्दे तनौ वा चाष्टमेपि वा॥तत्त-
द्राशौ भवेद्यावत्पठेत्तावद्दिनावधि ॥ ९०॥ चतुर्थे
दशमे वापि सप्तमे नवपञ्चमे ॥ गोचरे जन्मलग्नेशे
दशास्वन्तर्दशासु च ॥ ९१ ॥ गुरुलाघवज्ञानेन
पठेदावृत्तिसंख्यया ॥ शतमेकं त्रयं वाथ शतयुग्मं
कदाचन ॥९२॥ आपदस्तस्य नश्यंति पापानि
च जयो भवेत्॥ महाकालालये पीठे ह्यथवा जल-
सन्निधौ ॥९३॥ पुण्यक्षेत्रेऽश्वत्थमूले तैलकुंभाग्रतो
गृहे॥नियमेनैकभक्तेन ब्रह्मचर्येण मौनिना ॥९४॥
श्रोतव्यं पठितव्यं च साधकानां सुखावहम् ॥ परं
स्वस्त्ययनं पुण्यं स्तोत्रं मृत्युञ्जयाभिधम् ॥९५॥
कालक्रमेण कथितं न्यासक्रमसमन्वितम्॥ प्रातः-
काले शुचिर्भूत्वा पूजायां च निशामुखे ॥९६॥
पठतां नैव दुष्टेभ्यो व्याघ्रसर्पादितो भयम्॥नाग्नि-

## "श्रीवेङ्कटेश्वर" छापखानेकी परमोपयोगी, स्वच्छ, शुद्ध और सस्ती पुस्तकें।

यह विषय आज ५०।६० वर्षसे भारतवर्षमें प्रसिद्ध है कि, इस यन्त्रालयकी छपी हुई पुस्तकें सर्वोत्तम और सुन्दर प्रतीत तथा प्रमाणित हुई हैं। इस यन्त्रालयमें प्रत्येक विषयकी पुस्तकें जैसे–वैदिक, वेदान्त, पुराण, धर्मशास्त्र, न्याय, मीमांसा, छन्द, ज्योतिष, साम्प्रदायिक, काव्य, अलंकार, चम्पू, नाटक, कोष, वैद्यक तथा स्तोत्रादि संस्कृत और हिन्दी भाषाकी प्रत्येक अवसरपर विक्रीके लिये तैयार रहती हैं। शुद्धता, स्वच्छता तथा कागजकी उत्तमता और जिल्दकी बँधाई देशभरमें विख्यात है। इतनी उत्तमता होनेपर भी दाम बहुत ही सस्ते रखे गये हैं और कमीशन भी पृथक् काट दिया जाता है, अतः संस्कृत तथा हिन्दीके रसिकोंको अवश्य अपनी अपनी आवश्यकतानुसार पुस्तकोंके मँगानेमें त्रुटि न करनी चाहिये। ऐसा उत्तम, सस्ता और शुद्ध माल दूसरी जगह मिलना असम्भव है –) का टिकट भेजकर बड़ा 'सूचीपत्र' मँगा देवें।

पुस्तक मिलनेका पता–

| | |
|---|---|
| खेमराज श्रीकृष्णदास,<br>"श्रीवेङ्कटेश्वर" स्टीम्–प्रेस,<br>बम्बई. | गङ्गाविष्णु श्रीकृष्णदास,<br>"लक्ष्मीवेङ्कटेश्वर" स्टीम्–प्रेस,<br>कल्याण–बम्बई. |



तो न जलाद्वायोर्देशे देशान्तरेऽथवा॥९७॥नाकाले मरणं तेषां नापमृत्युभयं भवेत् ॥ आयुर्वर्षशतं साग्रं भवन्ति चीरजीविनः ॥ ९८ ॥ नातः परतरं स्तोत्रं शनितुष्टिकरं महत् ॥ शांतिकं शीघ्रफलदं स्तोत्रमेतन्मयोदितम् ॥९९॥ तस्मात्सर्वप्रयत्नेन यदीच्छेदात्मनो हितम् ॥ कथनीयं महादेवि नैवाभक्तस्य कस्यचित् ॥ १०० ॥

इतिमार्तण्डभैरवतन्त्रे महाकालशनिमृत्युञ्जयस्तोत्रं संपूर्णम् ॥